श्वाख्यो रत्यन्तविमुख स्त्रीरहस्यप्रकाशक ।
गार्दभ क्रूरसमर्दतृप्तिमात्रपरायण ॥ ३७ ॥

मार्जारजन्मा सातत्यादत्यन्तनिकटस्थिति ।
कौञ्जर क्लेशबन्धादिनिरपेक्षसमागम ॥ ३८ ॥

शुकाभिधोऽन्तर्निस्नेह काम मुखमुखस्थिति ।
हंसज सुखस्थित्या गुणदोषविभागवृत् ॥ ३९ ॥

पारावताख्य सस्नेहरतिसर्वस्वलक्षण ।
मायूर स्ववपुस्फीतरूपप्रमदनृत्तवान ॥ ४० ॥

बहुश सुरतामङ्गमात्रार्थी चटकाभिध ।
कृकवाकुभव कान्ताकेशलेशविभागवान् ॥ ४१ ॥

कोकिलो मधुरालाप प्रभूतप्रसरस्त्वथ ।
जीवजीवकसंज्ञश्च परिचुम्बननिश्चल ॥ ४२ ॥

केशाख्य सप्तदिवसस्थायी कृच्छ्रानुरञ्जक ।
अस्थिसंस्थोऽन्तरस्थश्च प्रच्छन्नस्नेहजीवित ॥ ४३ ॥

नखाभिख्यो मासमात्रस्थायी याति शनै शनै ।
प्राणिनामा प्रबुद्धोऽपि बद्धमुष्टिन लक्ष्यते ॥ ४४ ॥

दन्ताभिधो यस्ताम्बूललीलामात्ररुचि सदा ।
पादारयश्चरणालीन प्रणामैरेव केवलम ॥ ४५ ॥

तिलकप्रतिमो नीचस्यात्तमस्त्रीसमागम ।
कर्णपूरश्च कौटिल्यात् कर्णलग्नोऽतिकत्थन ॥ ४६ ॥

सवत्रानुचर शोपकारी छायाग्रहाभिध ।
अज्ञातचित्त स्तब्धाख्यो भूतसंज्ञो विचेतन ॥ ४७ ॥

अपस्माराभिध क्रूरकोपाक्षेप क्षणे क्षणे ।
ग्रहो वस्त्राञ्चलग्राही मजने विजने पथि ॥ ४८ ॥

गान्धर्वो गीतनृत्तादिरम्ससमक्तमानस ।
यक्ष क्षिप्तो न निर्याति गूहावृत्तिविचक्षण ॥ ४९ ॥

यत्तत्प्रलापमुखर क्षोभाख्यस्त्यक्तयन्त्रण ।
पैशाचश्चाशुचिरतरतीव्रक्षतविदारण ॥ ५० ॥

कौमुम क्षणिकोदार. पूजामात्रपरिग्रह ।
भग्नोऽपि कौम्भ शकलश्लेष श्लिष्ट इवेक्ष्यते ॥ ५१ ॥

नारङ्ग मरसोऽप्यन्तर्बहिस्तीक्ष्ण वर परम् ।
वहुगर्भतया रुद्धो हृदये दाडिमाभिध ॥ ५२ ॥

क्षणक्षैव्योपमो माद्य स्वस्थो वैलक्ष्यलक्षण ।
बीभत्साचारवैरस्यात् कुठारयोऽतिजुगुप्सित ॥ ५३ ॥

वैरूप्य च समायाति च्छेदेनेवाङगमर्मणाम् ।
चिताभिधान सर्वाङगदाही वश्यप्रयोगज ॥ ५४ ॥

भ्रामर कौतुकास्वादमात्रो नवनवोन्मुख ।
पातङग कामिनीदीप्तिरसिक क्षयनिर्भर ॥ ५५ ॥

वृश्चिकाख्यो व्यथादायी द्वेष्योऽप्यत्यन्तनिश्चल ।
त्यक्ताहारोऽतिसतापनष्टच्छायो ज्वराभिध ॥ ५६ ॥

भ्रमनामा मतिभ्रंशाच चक्राम्ध इवाकुल ।
स्मरणाख्य प्रियस्मृत्या कृतान्यस्त्रीसमागम ॥ ५७ ॥

रतिग्रह मदा स्वप्ने सप्राप्तसुरतोत्सव ।
रौधिर कलहे रक्तपातैर्नीचस्य वर्धत ॥ ५८ ॥

इत्यशीति समासेन रागभेदा प्रकीर्तिता ।
विस्तरेण पुनस्तेषा क सख्या कर्तुमर्हति ॥ ५९ ॥

सुहृज्जनाजन कुर्यात् पूर्वं वारविलासिनी ।
वेश्याना पद्मिनीना च मित्रायत्ता विभूतय ॥ ६० ॥

सुहृद्भिरेव जानाति कामुकाना धन गुणम ।
हृदयग्रहणोपाय शीघ्र रक्तापरक्तताम ॥ ६१ ॥

महाधनस्य सुहृदा कामिना प्रमशालिनाम ।
प्रच्छन्नसुरतेनापि कुर्यादाराधन सदा ॥ ६२ ॥

एको वित्तवत सूनु पितृहीन सुयौवन ।
मुग्ध भूभुजि कायस्थ कामिस्पर्धी वणिक्सुत ॥ ६३ ॥

नि यातुरामात्यवैद्यप्रसिद्धस्य गुरो सुत ।
प्रच्छन्नकामो जाड्यधन ॥ ६४ ॥

नपुसकप्रवादस्य प्रशमार्थी फलागन ।
गत्तो धूतसहायश्च राजसूनुर्निरङ्कुश ॥ ६५ ॥

ग्राम्यो धातृद्विजसुत प्राप्तलाभश्च गायन ।
मद्य साथपति प्राप्त श्रीमान देवपरायण ॥ ६६ ॥

गतानुगतिको मूख शास्त्रोन्मादश्च पण्डित ।
नित्यक्षीवश्च वदयाना जङ्गमा कल्पपादपा ॥ ६७ ॥

प्रथम प्रार्थिना वेश्या न क्षणोऽस्तीत्यदाहरेत ।
जनस्याय स्वभावो हि सुलभामवमन्यत ॥ ६८ ॥

शिर शूलादिक व्याधिमनित्यमजुगुप्सितम ।
अवहारोपयोगाय पूर्वमेव समादिशत ॥ ६९ ॥

पत्नीव कुर्यादनुवृत्तिपूर्वं पूर्वं महार्थस्य वरोपचारम् ।
द्रव्यैस्त्वया मन्त्रजपादिभिर्वा वशीकृतास्मीति वदेन् न सर्वम् ॥ ७०

स्वयं प्रदत्तेऽपि नखक्षते च शङ्केत तद्भक्तिविवादशीलम् ।
निन्देत् प्रकामं जननीं विरुद्धां गच्छेत् स्वयं वेश्म च कामुकस्य ॥ ७१

विदेशयात्रामपि मन्त्रयेत तेनैव सार्धं विहितानुबन्धा ।
सुप्तस्य कुर्यात् परिचुम्बनं च गुणस्तुतिं चार्धविबोधभाजः ॥ ७२

स्वप्ने मदैव प्रल्पेत् सरागं सर्वं च तन्नामनिबद्धमेव ।
न चास्य तृप्तिं सुरतेषु गच्छेद् व्ययस्य कुर्याच् च मुहुर्निषेधम् ॥ ७३

तस्माच् च पुत्रार्थमनोरथा स्यात् प्राणात्ययं तद्विरहे वदेच् च ।
इत्यादिभिः स्वीकरणाद्युपायैर्निबद्धबुद्धेर्द्रविणं लभेत ॥ ७४ ॥

तावन् न तूर्णं धनमाहरेत यावत् स रागेण विनष्टसञ्ज्ञः ।
प्रशान्तरागानलशीतलस्तु स लोहपिण्डीकठिनत्वमेति ॥ ७५ ॥

याचेत सर्वं सुरतातिकाले तमूरुबन्धेन निरुद्धकायम् ।
प्रायेण तृप्ताय न रोचते हि विनम्रशाखापरिपक्वमाम्रम् ॥ ७६ ॥

संधारयेत् तं च विशेषवित्तं यावन् न निःशेषधनत्वमेति ।
पुनः पुनः स्नेहलवार्द्रवक्त्रा दीपं यथा दीपकदीपवर्तिः ॥ ७७ ॥

निष्पीतसारं विरतोपकारं क्षुण्णेक्षुशल्कप्रतिमं त्यजेत् सः ।
लब्धाधिवासक्षयकारिशुष्कं पुष्पं त्यजत्येव हि केशपाशः ॥ ७८ ॥

हेमन्तमार्जार इवातिलीनः स चेन् न निर्याति निरस्यमानः ।
तदेव कार्यस्तनुमर्मभेदी प्रवर्धमानः परुषोपचारः ॥ ७९ ॥

शय्यावहारैर्वचनप्रहारैः कोपप्रकारैर्जननीविकारैः ।
कौटिल्यसारैर्विविधप्रसारैर्विपद्विचारैर्गणितापचारैः ॥ ८० ॥

याच्ञाधिवादैरधनापवादैर्दत्तानुवादैः परसाधुवादैः ।
निन्दाप्रवादैः परुषप्रवादैर्विटप्रवादैः कथितावसादैः ॥ ८१ ॥

मुहुः प्रवासैः कलहोपवासैर्मायानिवासैः कटुवाधिवासैः ।
सभ्रूविलासैर्व्यसनोपवासैर्निष्कासनीयः स पृथुप्रवासैः ॥ ८२ ॥

स चेत् पुनः रागजतुप्रसक्तस्तीव्रावमानैरपि न प्रयाति ।
तदा तमुत्क्षिप्तभुजान्यवक्त्रा दासी वदेद् वित्तवियोगदीनम् ॥ ८३

यत्राभवत् कामुकलोकयात्रा
विचित्ररूपा सततं विभूतिः ।
गृहे चतुर्थं दिनमद्य तस्मिन्
दृष्टस्य दृष्टस्य वधूत्सवस्य ॥ ८४ ॥

क्लीबस्य यस्यास्ति न भोगसंपत् स किं भुजिष्याभवने करोति ।
न यस्य हस्ते तरमूल्यमस्ति स किं समारोहति नावमग्रे ॥ ८५ ॥

प्रक्षीणवित्तेन निरुद्यमेन किं रूपयुक्तेन करोति वेश्या ।
विच्छिन्नदुग्धा न पुनः सगर्भा सा कस्य गौश्चारुतयोपयुक्ता ॥८६ ॥

मिथ्यैव रिक्तः कुरुते जडानामावर्जनं प्रेममयैर्वचोभिः ।
क्षीरक्षये चुम्बनलालनेन बालस्य वृद्धिं विदधाति धात्री ॥८७ ॥

इत्यादिभिस्तद्वचनावमानैस्तस्मिन् गते ग्रीष्मतुषारतुल्ये ।
क्षीणं निरस्तं पुनराप्तवित्तं भजेत यत्नाहृतवित्तमन्यम् ॥ ८८ ॥

प्राप्ते कान्ते कथमपि धनादानपात्रे च वित्ते
त्वं मे सर्वं त्वमसि हृदयं जीवितं च त्वमेव ।
इत्युक्त्वा न क्षपितविभवं कञ्चुकाभं भुजङ्गी
त्यक्त्वा गच्छेत् सदनमपरं वैशिकोऽयं समासः ॥ ८९ ॥

उद्देशलेशेन यदेतदुक्तं तत् कार्यकाले विविधप्रयोगम् ।
तस्मात् स्वबुद्ध्यैव विचार्य कार्यमुक्त्वेति तूष्णीं जरती चकार ॥९०

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितायां समयमातृकायां रागविभागोपन्यासो नाम पञ्चमः समयः ।

---

षष्ठः समयः ।

अथ क्षणक्षीणधनायमाने शनैः शनैर्निष्प्रतिभे शशाङ्के ।
द्यौर्दोषमुक्तेव विलोकनेन सविप्लवा मीलिततारकाभूत् ॥ १ ॥

इन्दौ प्रयाते कृतरात्रिभोगे प्रवेशकाले चिरकामुकस्य ।
वेश्येव सन्ध्या गगनाङ्गनायाः निर्दिष्टताराकुसुमं चकार ॥ २ ॥

अथोदिते स्वस्थितिदानदक्षे बाले रवौ श्रीमति पङ्कजिन्या ।
विकासकान्ते मधुपानकेलिरभूद् विटानामिव षट्पदानाम् ॥ ३ ॥

कलावती मौक्तिकभूषणाङ्का धम्मिल्लमाल्यप्रणयप्रसक्तैः ।
भृङ्गैर्वृता दर्पणमीक्षमाणा सतारका चन्द्रवती निशेव ॥ ४ ॥

स्मराङ्गनाकेलिशुकायमानकरस्थताम्बूलविलासपूर्णा ।
ससातृका नापितदत्तहस्ता कान्ता तनुं पण्यदशां नयन्ती ॥ ५ ॥

सलीलमानान्तिविलोलकाञ्चीरवेण पारावतदत्तसंज्ञा ।
अर्थार्थिनी राजपथप्रकारं हर्म्यं प्रियोत्सङ्गमिवारुरोह ॥ ६ ॥

तामब्रवीत् त्परिभोगयोग्यं प्रातर्नवं कामुकमीक्षमाणं ।
विलोक्य कङ्कः शयनोत्थितानां पण्याङ्गनानां गणयन् विचेष्टाः ॥ ७

आसन्नमित्रागममुच्यमानसमागमे वासरवल्लभस्य ।
निर्यान्ति दीपा इव रात्रिभोग्याः पश्य प्रभाते गणिकागृहेभ्यः ॥ ८

एव प्रबुद्ध सहसा जटाभृल्लीलाशिव कुक्कुटकूजितेन ।
गृहान् नलिन्या परिहृत्य राजरथ्या कुमार्गेण मठ प्रयाति ॥ ९ ॥

एते निर्वेनिग्रहभट्टसूनो पृष्टा विटा रात्रिसुख प्रभाते ।
कर्तुं प्रवृत्ता पृथुभोज्यभूरिव्ययाय भद्राभवने विभागम् ॥ १० ॥

प्राप्ते गृहद्वारमनङ्गसारे महाविटे पश्य वसन्तसेना ।
शून्यप्रसुप्तापि पुर समेत्य निशीथभोग कथयत्यसत्यम् ॥ ११ ॥

भग्नाङ्गदा त्रोटितवर्णपाली मतङ्गनाम्ना गणपालकेन ।
आत्मापराध विनिगूहमाना विरौति रामा जननीजनाग्रे ॥ १२ ॥

निर्गच्छतो ग्रामनियोगिनोऽस्य ददाति गुप्तस्य समेत्य पश्चात् ।
इद तथेद च पुर प्रहेयमित्यादि सदेशशतानि वृद्धा ॥ १३ ॥

सप्रस्थितेय सह माधवेन कोश ध्रुव पातुमनङ्गलेखा ।
अग्रे यदस्या मधुकुम्भवाही मेष विकर्षन् पुरुष प्रयाति ॥ १४ ॥

टक्कस्य सा स्खलितस्य विप्राय यत स्कन्दकदानकाले ।
प्रमाधनाय स्वयमेव गन्तु समुद्यता पश्य शशाङ्कलेखा ॥ १५ ॥

उद्यानलीलागमने निशाया मुनिलिखिते मल्लिकयार्जुनस्य ।
वृत्त प्रभाते नवचीनवस्त्रदान विना पश्य मुहूर्तविघ्न ॥ १६ ॥

मेघप्रदस्येन्द्रवसोर्द्विजस्य मुक्त्वा प्रभूत निशि काल्यखण्डम ।
विपूचिकार्ता विटहर्षहेतुर्वैद्यार्थिनी क्रन्दति कुट्टनीयम ॥ १७ ॥

वैद्योऽप्यसौ मण्डलगुल्मनामा प्रभातचारी नगरार्जितानि ।
समुद्यत पूगफलानि दातु कुरङ्गिकायै निजमुष्टिपूरै ॥ १८ ॥

कक्षालनाम्ना निशि गायनेन वारावहारान् निश(?)भग्नभाण्डा ।
गृह्णाति वा नो(?)चरणस्पृशोऽस्य वराशुक कुम्भघटादिमूल्यात् ॥१९

प्राप्तस्य शम्भोर्वणिजस्तु वारे सुप्तस्य शून्ये शयने निशायाम् ।
नन्दा ममेत्यापरवामिगेहात् सविप्रलम्भ शपथ करोति ॥ २० ॥

पितुर्गृहाद भूरिविभूपणानि प्राप्त गृहीत्वा मदन मृणाली ।
निगूह्य सदर्शयति स्वगेह शून्य तमन्विष्टुमुपागतानाम् ॥ २१ ॥

भोज्य विना पाटलिका प्रविष्ट मुष्टिप्रद श्रोत्रियमत्रिरात्रम् ।
शुष्कान्नदाता पितृकार्यमेतत् किं किं करोपीत्यसकृद् ब्रवीति ॥ २२

मार्जारजिह वा जननी हरिण्या
पद्मास्य भोज्य निशि लुण्ठित यत ।
तस्मिन गते तद्द्विजने विशङ्का
पश्य प्रभाते कवलीकरोति ॥ २३ ॥

ईर्ष्याविशेषात् कृतकोपवादसमूर्छिताया मन्य रमण्याम ।
विभूपण तोपणमाशु किंचिदस्यै प्रयच्छेति वदन्ति सख्य ॥ २४

रागेण कृष्णीकृतकेश एप वलीविशेषस्फुटवृद्धभाव ।
योगागृह शम्बरसारनामा यागाय युग्येन गुरु प्रयाति ॥ २५ ॥

अय जनस्थानविनाशहेतु केतु खरकूरतया प्रसिद्ध ।
आस्थानभट्टस्त्रिटिवत्सनामा प्रयाति युग्येन विशीर्णवस्त्र ॥ २६

उच्चैश्चिरात सौधनिपक्तदृष्टिरश्वाधिरूढ कमलोऽधिकारी ।
वल्लावति त्वामयमीक्षमाण शूलार्पिताकारतुला बिभर्ति ॥ २७

श्रीखण्डोज्ज्वलमल्लिकातिलकवानक्षामहेमाङगद-
श्छिन्नश्लिष्टविनष्टनासिकतया प्रख्यातजारज्वर ।
एप त्वामवलोक्य मालवपतेर्दूत प्रपञ्चाभिध
पश्योद्दिष्टविवेष्टनानि कुरुते भोगीव मन्त्राहत ॥ २८ ॥

एष प्रख्यातकूट कपटविटघटानर्मकर्मप्रगल्भ
श्रीगुप्तो नाम धूर्त सकलकलिकलाकल्पनामूलदेव ।
दृष्ट्वा दूरात् प्रसिद्धा तव नवजननीमञ्जलिश्लिष्टहस्त
पद्माक्षणा दत्तसज्ञ स्मितचलचिबुक स्तोतुमेता प्रवृत्त ।।२९

पातालोत्तालतालुप्रविततवदनस्पष्टदृष्टोग्रदष्ट्रा
विश्वग्रासावहेलाकुलितशिखिशिखाविभ्रमोद्भ्रान्तजिह्वा ।
मेषाणा चण्डमुण्डाहरणकटकटारावपिष्टास्थिसस्था
सिद्धा शुष्कातिपूर्णा जयति भगवती कुट्टनी चण्डघण्टा ॥ ३०

एष स्फीतधनस्य लोभवसते पापस्य मूर्तिस्पृश
शङ्खाख्यस्य महार्घहट्टवणिज पङ्काभिधान सुत ।
आकृष्ट प्रतिवेशनिर्गतविटै सारङ्गममुग्ध शिशु
सुभ्रु त्वा तुपगशिलोलचटकाकार समुद्वीक्षते ॥ ३१ ॥

एष निधिर्विधिना तव नून मेषमतिर्विहित प्रहितो वा ।
स्थूलमुख पृथुचूलकलाप स्कन्धयुगाञ्चितकर्णसुवर्ण ॥ ३२ ॥

इत्यादि कङ्केन वितर्क्यमाण वणिक्सुत दृक्पतित विचार्य ।
मनोरथाभ्यर्थितलाभतुष्टा कङ्कालिका सस्मितमित्युवाच ॥ ३३

निर्यत्ताम्बूललालालवशबलचलन्दग्रीवकवक्त्रावलोकी
रक्तोपानद्युगोद्यत्सरसरमुखरप्रस्खलत्पादचारै ।
एवरूपोऽतिमुग्ध शिशुरखिलधनावाप्तये वन्धकीना-
मवश्याराधनार्ह स्वयमुपनमति प्रायश पण्यपुण्यै ॥ ३४

कल्यावति त्वन्मुखनिश्चलोऽस्य महाविटश्चारणचक्रचारै ।
निवेदितोऽग्रे तव देवताया शिशु पशुर्भोगविभूतिकामै ॥ ३५

पार्श्वे त्वमेषा व्रज वङ्क तूर्णं दूत करिष्यन्ति भवन्तमेते ।
तथेति दत्तोचितशासनोऽसौ जगाम सौधादवरुह्य हृष्ट ॥ ३६ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितायां समयमातृकायां
षष्ठ समय ।

---

सप्तम समय । कामुकसमागम

अथाययौ शनै श्रीमान् नवोद्भूतमनोभव ।
लतालिङ्गनहृद् बाल काल कुसुमलाञ्छन ॥ १ ॥

सभोगसुखसपत्ति पराधीनेव कामिनाम् ।
आलम्बे धनेशाशामितीवाकलयन रवि ॥ २ ॥

दक्षिणानिलसोच्छ्वासा लसत्कुसुमपाण्डरा ।
जातजृम्भा ययुस्तन्व्यो लता सोत्कण्ठतामिव ॥ ३ ॥

दग्धऽन्धकद्विषा रोषात् पुराणे पञ्चसायके ।
नव विनिर्ममे काममृतुराज प्रजापति ॥ ४ ॥

प्रस्खलत्कोकिलालापा गायन्त्यो भृङ्गशिञ्जितै ।
वेश्या इव मधुक्षीबा विरेजुर्वनराजय ॥ ५ ॥

नवकिसयलेखा पङ्क्तिसङ्गे लताना
नखमुखलिपिलीलालोभिनीमाकलय्य ।
मधुमदपरिरम्भे भेजिरे लोहितत्व
स्थलकमलवनानामीर्ष्ययेवाननानि ॥ ६ ॥

क्षीणक्षाम शिशिरसमय वृद्धमुत्सृज्य दूरे
त्यक्त्वा शीन तरुणमसकृद गाढरागानुबन्धम् ।
उद्यानश्रीर्मधुमभिमत बालमेवालिलिङ्ग
प्राय स्त्रीणा वयसि नियतिर्नास्ति कार्यार्थिनीनाम् ॥ ७ ॥

अथ नापितदूतेन कृतद्वित्रगतागता ।
मिथ्याकृतनिषेधापि ग्रहणाग्रहणे शिग्रो ॥ ८ ॥

कथचिदभ्यर्थनया गृहीतार्था कलावती ।
सध्याया मण्डनासक्ता ययौ वासकसज्जताम् ॥९॥ (युगलकम्)

कपोले कस्तूरीस्फुटकुटिलपत्राङकुरलिपि-
　र्ललाटे कार्पूर तिलकमलकालीपरिसरे ।
तनौ लीना हेमद्युतिपरिचिता कुङ्कुमरुचि
　स तस्या कोऽप्यासील ललितमधुरो मण्डनविधि ॥ १० ॥

प्रौढकामुकसभोगसाक्षिणी बालसगमे ।
नोचितास्मीति तामूचे लज्जया नतमेखला ॥ ११ ॥

हारिणी सा तनुलता हारिणी च कुचस्थली ।
दृष्टिश्च हारिणी तस्या बभौ स्मरविहारिणी ॥ १२ ॥

अत्रान्तरे वणिक्सूनुर्विवेश गणिकागृहम् ।
आसन्नलाभाभिमुखैरावृत क्षेत्रवासिभि ॥ १३ ॥

कर्णसक्तमुक्ताङ्कनकस्थूलवालक ।
बहुहेमभराक्रान्तिमव्यथश्रवणद्वय ॥ १४ ॥

कण्ठाभरणमध्यस्थहैमरक्षाचतुष्टय ।
जननीहस्तविन्यस्तसर्षपाङ्कितचूलिक ॥ १५ ॥

राजावतमणिस्थूलगुलिकाभ्या विराजितम् ।
राजत चरणालीन बिभ्राण कटकद्वयम ॥ १६ ॥

मुहुर्दीर्घाञ्चलदशा स्रस्ता सकलयन पटीम् ।
बहुचूर्णकताम्बूलदग्धास्यवृतसीत्कृत ॥ १७ ॥

म प्रविश्य प्रकामाशा ददर्शादर्शमादरात् ।
कलावती कलाकान्तलल्तिामिव शर्वरीम् ॥ १८ ॥

यत्र लालनयोग्योऽय बाल सभोगभाग् भवेत् ।
इतीव ताम्हारेण सस्मितस्तनमण्डलात् (?)॥ १९ ॥

द्रविणक्षयदीक्षाया वैचक्षण्यकृतक्षणा ।
ऋत्विज सप्त विविशु पुरस्तस्य महाविटा ॥ २० ॥

निर्गुट क्षीणसाराख्यो दिविर कमलाकर ।
रेचको भरतानार्य क्षुण्णपाणिस्तुलाधर ॥ २१ ॥

गणक सिंहगुप्तश्च तिक्तनामा भिषक्सुत ।
कटि कुटिलकश्चेति भोगाम्भोरुहषट्पदा ॥ २२ ॥

वेश्यासमागमे शैली शिक्षित स विटैर्वहि ।
प्रविश्य कामिनीपार्श्वे प्रौढवत् समुपाविशत ॥ २३ ॥

वामसाच्छाद्य नासार्धमप्रस्तावकटूत्कटाम् ।
नर्मगोष्ठीं स विदधे शिक्षिता शुकपाठवत् ॥ २४ ॥

तत्र प्रविश्य कङ्काली गृहीतोच्चतरासना ।
रञ्जनाय पुरश्चक्रे विटाना कपटस्तुतिम् ॥ २५ ॥

धन्योऽय बालक श्रीमान् भवद्भिर्यस्य सङ्गति ।
युष्मत्परिचय पुण्यपरिपाकेन लभ्यते ॥ २६ ॥

शिशुरप्ययमस्माक कामुकोऽभिमत परम ।
बाल एव महस्वानु कमलिन्या विकासकृत् ॥ २७ ॥

इत्यादिभि स्तुतिपदै कुट्टन्या विटमण्डले ।
स्वीकृत भूरभूत क्षिप्र ताम्बूलाबेलपाटला ॥ २८ ॥

तत काली कलावत्या धात्री वेतालिकाभिधा ।
ताम्बूलदानावसरप्रहर्षाकुलितावदत ॥ २९ ॥

अत्यल्प परिवारोऽय ताम्बूलप्रणयी स्थित ।
नास्माकमन्यवेश्यानामिवामम्य परिग्रह ॥ ३० ॥

कङ्क प्रथमपूज्योऽय देवाकृतिरदारधी ।
यस्यानुरोधात् सुलभा दुर्लभापि कलावती ॥ ३१ ॥

जामाता गौरवार्होऽय पूज्य कन्यार्पणेन न ।
शाडखिर समग्रो नाम समान पूर्वमर्हति ॥ ३२ ॥

अय पितु कलावत्या प्रेतकार्यप्रतिग्रही ।
ह्य पर्वदिवमावाप्त ·· शक्तिर्महाव्रती ॥ ३३ ॥

अय स्थलपते सूनु कपिल कलशाभिध ।
गुरुभ्राता कलावत्या कल्पपालो मधुप्रद ॥ ३४ ॥

मृदङ्गोदरनामाय कलावत्या स्वसु पति ।
मातुल कलहो नाम बिन्दुसार महोदर ॥ ३५ ॥

इय दत्तकपुत्रस्य कलावत्या कलायुष ।
धात्री कलावती नाम रणचन्द्रश्च तत्पति ॥ ३६ ॥

अय भरतभार्याज्ञ काम्बो भागवतात्मज ।
गायन मरदासोऽय महामात्यस्य वल्लभ ॥ ३७ ॥

निमित्र सूपकाराख्य कुम्भकारश्च खर्पर ।
चलच्छत्रधरश्चाय खञ्जनो युग्यवाहन ॥ ३८ ॥

रतिशर्मा द्विजन्माय गणिकाग्रहशान्तिकृत् ।
आगमिक करालोऽय नीलपतश्च नापित ॥ ३९ ॥

उद्यानपालः कन्दोऽयं मुकुलास्यश्च पौष्पिकः ।
नर्मकृद् वर्मदत्तोऽय मारच्छिद्रश्च धावकः ॥ ४० ॥

बहिरास्ते च चाण्डाली क्रोशन्ती घर्घराभिधा ।
डोम्बश्चण्डरवाम्यश्च कोष्ठागारप्रहारिकः ॥ ४१ ॥

ताम्बूलं देयमेतेभ्यः प्रहेयं प्रातरेव तु ।
मन्ये शम्बरमालायै गुरवे दम्भभूतये ॥ ४२ ॥

उक्त्वेति पूगफललुण्ठिनिविष्टचित्ता
वैतालिका विविधवेशवनीप्रविष्टाः ।
चक्रुः प्रभूतमधुपानविघूर्णमाना-
स्ताम्बूलदानबहुमानगतागतानि ॥ ४३ ॥

ततः क्षीबैरसंभाव्य कथ्यमानैर्विटैः परम् ।
उद्वेजितेव रजनी धूपव्याजेन निर्ययौ ॥ ४४ ॥

नृपस्य बाहुर्युधि दक्षिणोऽहं
ममैव राज्यं कलमान्तरस्थम् ।
मयि स्थिते तिष्ठति नाट्यशास्त्रं
सूते तुला वित्तपतिश्रियं मे ॥ ४५ ॥

त्रैलोक्यवृत्तं गणितेन वेद्मि मयैव भोजस्य कृता चिकित्सा ।
भुक्ता मया भूपतयः स्वसूक्तैरित्यूचिरे मद्यमदोद्धतास्ते ॥ ४६ ॥

विसृष्टास्ते कलावत्या ताम्बूलार्पणलीलया ।
निर्ययुः कलयन्तोऽन्तर्भाविनी भोज्यसंपदम् ॥ ४७ ॥

अथ विततवितानं हंसशुभ्रोपधानं
शयनममलचीनप्रच्छदाच्छादिताग्रम् ।
अभजत हरिणाक्षी क्षीबमादाय बालं
निजपरिजननर्मस्मेरवक्त्राम्बुजश्रीः ॥ ४८ ॥

शिशुतररमणेऽस्या कौसुमामोदलुभ्यद्-
भ्रमरभरनिपातैर्घूर्णमाना प्रकामम् ।
प्रसरदगुरुधूमश्यामलाग्रा बभूवु-
र्वलितविरतवक्त्रा लज्जयेव प्रदीपा ॥ ५० ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितायां समयमातृकायां
कामुकसमागमो नाम सप्तमः समयः ।

---

## अष्टमः समयः कामुकप्राप्तिः

अथ सितकिरणरतिश्रमखिन्नेव विनिद्रतारका रजनी ।
प्राभातिकसलिललवस्वेदवती क्षामतां प्रययौ ॥ १ ॥

गणिका ततः प्रभाते सकलनिशाजागरेण ताम्राक्षी ।
रात्रिमुखप्रश्नपरा प्रोवाच समेत्य कङ्कालीम् ॥ २ ॥

शृणु मातः शिशुवयसस्तस्य स्फुटतामकाल्पपुष्टस्य ।
यस्याल्पकस्य बहुलं मरिचकणस्येव तीक्ष्णत्वम् ॥ ३ ॥

आरोपितः स चेट्या खट्वामत्युन्नतां शनैः शिशुवत् ।
निश्चलतनुर्मुहूर्तं धूर्तः स च कृतकसुप्तोऽभूत् ॥ ४ ॥

ललनासुलभकुतूहलचपलतयालिङ्गितः स्वयं स मया ।
तत्क्षणनखमुरतान्ते महसा निःचेष्टतां प्रययौ ॥ ५ ॥

पूगफलमस्य लग्नं ज्ञात्वेति मया स शीतसलिलार्द्रम् ।
दत्त्वा वक्षसि हस्तं प्रलयभयाल् लम्भितः संज्ञाम् ॥ ६ ॥

बालमुखं तरुणतरं रभसरसेन प्रबोधयन्त्या तम् ।
कष्टं मयैव क्रुष्टो ज्वलिताङ्गारः स्वहस्तेन ॥ ८ ॥

रोदिति शिशुरिति दयया यस्य न दशनक्षतं मया दत्तम् ।
तेन ममाधरबिम्बं पश्य शुकेनेव खण्डितं बहुशः ॥ ९ ॥

मुहुरारोहणहेलापरिरम्भैर्वामनीकृतं तेन ।
शिशुसंगमात् क्षणं मे लज्जितमिव नोन्ननाम कुचयुगलम् ॥ १० ॥

अङ्गस्थाननखक्षतविक्षततनुवल्लरी परं तेन ।
गुप्तिं कथं करिष्ये विदग्धजनसंगमेऽङ्गानाम् ॥ ११ ॥

उक्त्वेति वाररमणी निखिलनिशीथप्रजागरोद्विग्ना ।
क्षोणीं निरीक्षमाणा वैलक्ष्येण क्षणं तस्थौ ॥ १२ ॥

तामवदत् कङ्काली सस्मितवदना विटङ्कदंष्ट्राभिः ।
भोगोद्भवे विटाना मनोरथं पाटयन्तीव ॥ १३ ॥

एवंविधैव मुग्धे परिशीलितहट्टचेटकटुकानाम् ।
प्रौढिः कण्टकतीक्ष्णा भवति परं पण्यजीवनशिशूनाम् ॥ १४ ॥

पितृभवनहृतं नियतं हस्तगतं विद्यते धनं तस्य ।
भवति न तद्विधमधिकं प्रागल्भ्यं रिक्तहस्तस्य ॥ १५ ॥

बिलनिहितद्रविणकणश्चपलगतिर्मूषकोऽप्यलं प्लवते ।
दानक्षीणस्तन्द्री मुषिरकरः कुञ्जरो भजते ॥ १६ ॥

विटविनिवारणयुक्त्या निर्मक्षिकमाक्षिकोपमं सहसा ।
गत्वा करोमि तावत् तवोपजीव्यं वणिक्तनयम् ॥ १७ ॥

अस्माकमङ्गमङ्गं पण्योपनतं महाधननिधानम् ।
दासीसुताः किमेते खादन्ति विटाः प्रसङ्गेन ॥ १८ ॥

इत्युक्त्वा तूर्णतर शय्याभवनस्थित समभ्येत्य ।
शिशुमवदत् कङ्काली विजनकथाकेलितन्त्रेण ॥ १९ ॥

अपि पुत्र रात्रिरखिला सुखेद ते कुमुदहासिनी याता ।
बन्धनयोग्योऽस्माक कलावतीहृदयचोरस्त्वम् ॥ २० ॥

ध्यान वलन जृम्भणमुच्छ्वसन वेपन परिस्खलनम् ।
त्वत्सगमेऽपि यस्या कि कुरुते निर्गते त्वयि सा ॥ २१ ॥

लङ्घिततरुणममुद्रा कलावती यत्पटाञ्चले लग्ना ।
यामर्थयते दूतैर्दक्षिणदिग्वल्लभो भोज ॥ २२ ॥

जन्मान्तरेऽनुबद्धा यदि नेय सगति कृता विधिना ।
तत्वि त्वयि मम जाता परलोके पुत्रकार्याशा ॥ २३ ॥

विघ्नस्तु सगमेऽस्मिन्नेक परिचिन्तितोऽस्ति मे भयद ।
यदय विटसघाल कण्टकजालायते परित ॥ २४ ॥

भुक्त्वा पीत्वा भवत परधनवर्णा स्ववित्तपरिहीणा ।
धूर्तास्त्वामेव पितुर्बन्धनयोग्य प्रयच्छन्ति ॥ २५ ॥

तस्माद् यदि दिनमेक तिष्ठसि सुतरामदृश्यरूपस्त्वम् ।
तदय कुटिलविटाना नैराश्याद् भिद्यते यूथ ॥ २६ ॥'

इत्युक्ते कुट्टन्या शैशवसरलाशयो वणिक्सूनु ।
तामवदत् सत्यमिद स्नेहात् मातस्त्वया कथितम् ॥ २७ ॥

अस्ति ग्रन्थिनिबद्ध मम किंचिज् जनकभाण्डशालात्तम् ।
तदिद गृहाण दुहितुर्मण्डनभोगव्यये योग्यम् ॥ २८ ॥

इत्युक्त्वा सान्तर दत्त्वा तस्यै शिशुर्गुप्तद्रविणम् ।
तामदर्शितमविशच् छद्मपथ पृथुलहर्म्यतल्पकोष्ठम् ॥ २९ ॥

त प्रच्छाद्य सहर्षा कृत्वा मिथ्या मुख नवविषादम् ।
अभ्येत्य विटानवदत् वङ्गाली कलकलारम्भे ॥ ३० ॥

आजन्मसहजसुहृदामस्मत्प्रणयोपचारतुष्टानाम् ।
उचित किमयमकस्माद् भवता निन्द्य समाचार ॥ ३१ ॥

दस्युसुतस्तीक्ष्णतर स भवद्भि कि वणिक्सुतव्याजात् ।
रत्नाभरणाकीर्णं प्रवेशितोऽस्मद्गृह रात्रौ ॥ ३२ ॥

अन्यगणिकाप्रयुक्ता यदि यूय प्रहसनोद्यता प्रसभम ।
तत् किं स्त्रीवधमदृश क्रियते पृथुमाहस पापम् ॥ ३३ ॥

स पर प्रभातनिद्रालवविवशाया क्षण कलावत्याम् ।
आदाय हारसहित केयूरयुग गत कामी ॥ ३४ ॥

श्रूयन्ते प्रतिनगर भूषणलुब्धै पणाङ्गना निहता ।
निजदेवताप्रसादात् कलावती किं तु मुक्ताद्य ॥ ३५ ॥

तेन यदेतन् नीत राजकुले कस्य मूर्ध्नि परिपतति ।
प्रतिभूर्भवद्विधाना वय गृहीत पण्यललनाभि ॥ ३६ ॥

पश्यत पश्यत लोका कलिकाल कीदृश प्रवृत्तोऽयम् ।
स्निग्धा सुहृद सधना स्त्रीवधपाप भजन्ते यत ॥ ३७ ॥

को वेत्ति गुणविभाग हस्तेन परीक्ष्यते कथ जाति ।
दुर्ज्ञेय कुटिलाना चेष्टितमन्यद वचश्चान्यत् ॥ ३८ ॥

इत्युक्त्वा गृहपरिजनकलकलकल्होदग्रदु गहविकारा ।
वङ्काली राजपथे चुक्रोश गतागतैस्तारम् ॥ ३९ ॥

तद्भीत्यैव विटास्ते सपदि विवर्णा निरुत्तरप्रतिभा ।
निर्गत्योत्पथविवरैर्दूरतरे सङ्गम चक्रु ॥ ४० ॥

अथ ते विचार्य सुचिरं भोगभ्रष्टाः समापतितकष्टाः ।
मिथ्यापवादनष्टा विफलविलष्टा मिथो जग्मुः ॥ ४१ ॥

जाताक्षपटलदोषैरिव नास्माभिर्व्रजन् वणिग् दृष्टः ।
कङ्काल्यैव हृतोऽसावित्यवदन् निर्गुटस्तत्र ॥ ४२ ॥

राशिं निगूह्य वणिजः पश्यत भूर्जेन निग्रहोऽस्माकम् ।
पृष्ट्यैव कृतोऽत्र परिशोचनब्रवीद् दिविरः ॥ ४३ ॥

विहिताङ्गहारयुक्तिः कुट्टन्या पूर्वरङ्गयोग्योऽयम् ।
अस्मद्वृत्तं वृत्तं किमन्यदिति नाट्यवित् प्राह ॥ ४४ ॥

कपटतुला कटवालीमटरशनाङ्कामहं वेद्मि ।
विहितस्तया भ्रमोऽसावित्याह तुलाधरः कोपात् ॥ ४५ ॥

आकृष्य मेषभोगाद् दूरतरं मित्रमण्डलं वणिजः ।
कालकल्ययेव नीतं कङ्काल्या गणक इत्यूचे ॥ ४६ ॥

पेया मद्यसमृद्धिस्तयैव मा कृतचिकित्सायाम् ।
लङ्घनमिदमुपदिष्टं तापादित्यब्रवीद् वैद्यः ॥ ४७ ॥

नवमुखचरितं नष्टं कष्टं विभ्रष्टनियमवृत्तानाम् ।
अस्माकमेतदनुपममित्याह कविः श्वसन् विरसः ॥ ४८ ॥

इति दुःखकोपविस्मयलज्जाकुलिताः कथां मिथः कृत्वा ।
कुसुमारामभ्रष्टा इव मधुपास्ते विटाः प्रययुः ॥ ४९ ॥

अथ कङ्काली गूढं निःशल्या कामभोगसामग्रीम् ।
आस्वाद्य निशामनयन् निःशङ्कमहोत्सवोत्साहा ॥ ५० ॥

प्रातर्विचिन्त्य युक्तिं सा गत्वा हट्टभाण्डशालायाम् ।
कामिजनकस्य वणिजः स्फीतार्थसमृद्धिमद्राक्षीत् ॥ ५१ ॥

सोऽपि महाधनसंचयलाभविशेषेऽपि सद्ग्राहः ।
पुनर्हृतहेमचिन्तासंतापात् कातरतरोऽभूत् ॥ ५२ ॥

उन्नतवृसीनिविष्टः कोटिनयलेख्यसंपुटीहस्तः ।
अर्थिजनवदनदर्शनमीलितनयनप्रसक्तसततान्ध्यः ॥ ५३ ॥

बन्धादिमोक्षणागतलाभपरित्यागयाचने बधिरः ।
अत्यल्पपण्यदानप्रश्नप्रतिवचनजल्पने मूकः ॥ ५४ ॥

तैलमलकलिलाञ्छितमूषकजग्धार्धटुप्पिकाविकटः ।
शीर्णोर्णाप्रावरणप्रलम्बघनकञ्चुकाञ्चलालोलः ॥ ५५ ॥

नग्नोरुजानुजर्जरधूमारुणपृथुलशिथिलमोचोटः ।
रूक्षश्मश्रुकलापस्थूलप्रलम्बलट्टुम्पकग्रन्थिः ॥ ५६ ॥

निजगृहदिवसपरिव्यययाच्ञागतकन्यकाप्रहारोग्रः ।
रज्जुग्रथितबुभुक्षितमार्जारीरावनिर्दयप्रकृतिः ॥ ५७ ॥

दूराद् विनवर्यमाणः स तया नामार्पिताङ्गुलीलतया ।
ख्यातः स एव वणिगयमिति विदधे स निश्चितं तस्याः ॥ ५८ ॥

साथ शनैरुपसृत्य प्रविरलजननिर्मलावसरे ।
तमभाषत भाण्डपते वक्तव्यं किंचिदस्ति मम विजने ॥ ५९ ॥

पुत्रस्ते मुग्धमतिर्मृगशिशुरिव लुब्धकैर्विटैः दृष्टः ।
हारितभूषणवसनः संध्यायां ह्यो मया दृष्टः ॥ ६० ॥

दयया प्रवेशितोऽसौ मया स्वगेहं मनोहराकारः ।
अविशत् क्षणं न जाने केन पथा मत्सुताहृदयम् ॥ ६१ ॥

स तया स्नानानन्तरचित्राम्बरभूषणार्पणप्रणयैः ।
राजार्हविविधभोगैः कामं त्वाभ्यर्चितो भक्त्या ॥ ६२ ॥

वंशजगौरवयोगात् सुवृत्तताश्लाघ्यरूपसंभार ।
कण्ठे हार इवासीं कृतस्त्वया गुणगणोदार ॥ ६३ ॥

कायपणार्जितबहुविधराजसुतामात्यबहुधनेन सह ।
अधुना त्वत्तनयोऽस्या स्वामी प्राग्जन्मसंबन्धात् ॥ ६४ ॥

उचिततरसङ्गसुभगा दृष्ट्वैव बलाद्वती रागयौवनोन्मत्ताम् ।
तव हस्ते निक्षिप्त स्त्रीधनसहित मया गेहम् ॥ ६५ ॥

यातायां मयि तीर्थं कंचित् कालं त्वया कृपावत्या ।
मुद्रामुद्रितमखिलं सर्वस्व पालनीयं तत् ॥ ६६ ॥

अत्र तु भवता कार्ये पुनस्नेहात् स्नुषानुरोधाच्च ।
अस्मद्गेहे स्वल्पो भोज्योत्सवमङ्गलाचार ॥ ६७ ॥

उक्त्वेति साश्रुनयना कङ्काली तस्य वज्रहृदयस्य ।
निपपात चरणयुगले सुतलाभविशेषतुष्टस्य ॥ ६८ ॥

स च तामुवाच भद्रे सर्वमिदं हर्षकारि कुशलतरम् ।
किं तु त्वद्गमन मे नाभिमतं सह गमिष्याव ॥ ६९ ॥

परभोजननियमवता भोक्तव्य त्वद्गृहे कथं नु मया ।
सभोजनमूल्य मे गृह्णामि तदा गमिष्यामि ॥ ७० ॥

इत्युक्त्वास्या हस्ते दत्त्वा हृष्ट स रूपक माषम् ।
तामन्त स्मितवदना विसृज्य पश्चाद् ययौ भोक्तुम् ॥७१ ॥

तत्र पुन सविलास दृष्ट्वा सान्नामतरथसभोगम् ।
निर्व्ययभोज्यसमृद्ध्या निश्चिन्त प्रीतिमानभवत् ॥ ७२ ॥

कर्पूरैर्गापरिमलरसवासितविविधभोजन भुक्त्वा ।
पीत्वा च भूरि मद्य जगाद लुब्ध स कङ्कालीम् ॥ ७३ ॥

सततं दिनव्ययं वः सर्वमहं समुचितं प्रदास्यामि ।
एवंविधस्तु न पुनः कार्यः स्थूलव्ययारम्भः ॥ ७४ ॥

इत्युक्त्वा स गृहं निजमगमद् गगनस्थलीकृपिकृताशः ।
लाभप्रदर्शनं किल लुब्धधियां वञ्चनोपायः ॥ ७५ ॥

अन्येद्युर्दिवसव्ययमानेतुं कुटिलचेतसस्तस्मात् ।
चित्तग्रहणाय निजां विससर्ज कलावती दासीम् ॥ ७६ ॥

सुचिरात् समेत्य दासी शरावचञ्चत्सहिङ्गुकणभूर्जा ।
हस्तेन विस्फुटन्ती कलावतीं सस्मितामवदत् ॥ ७७ ॥

श्वशुरेण ते महार्घः प्रहितोऽयं भूरिभोज्यसंभारः ।
उत्तिष्ठ कुरु विभागं निमन्त्र्यतां बन्धुवर्गश्च ॥ ७८ ॥

तैलस्य तोलकमिदं तोलकयुगलं च चूर्णलवणस्य ।
दत्त्वा मामिदमूचे भ्रुकुटीकुटिलाननः स परम् ॥ ७९ ॥

तैलमिदं लवणमिदं शाकाय श्वेतिकाद्वयं दत्तम् ।
वेश्यायाः किं कामी ददाति दिवसव्यये लक्षम् ॥ ८० ॥

इत्युक्त्वा तत्प्रहितं दासी सदस्यं थूत्कृत्य बहुशः ।
क्षिप्त्वा दूरे तन्मुखदर्शनमलिनां निनिन्द दृशम् ॥ ८१ ॥

अन्येद्युः कङ्काली विचिन्त्य तद्वञ्चने सुखोपायम् ।
प्रययौ कृत्वा विजने कलावतीं विदितवृत्तान्ताम् ॥ ८२ ॥

सा वर्णमानमुद्रासदृशसमुद्गद्वयं विधाय नवम् ।
एकस्मिन्नाभरणान्यन्यस्मिन्नुपलखण्डिका विदधे ॥ ८३ ॥

स्थूलतरतूलपटिकाप्रावरणं प्राप्य भाण्डशालाग्रम् ।
सा पश्चात्करवृतसमुद्गयुगलावदद् वणिजम् ॥ ८४ ॥

वाराणसीप्रयाणे नक्षत्र क्षिप्रकृत् ममापनतम् ।
नास्ति पुनर्नगुनातरदर्शनमाय त्वयि गतायाम् (?) ॥ ८५ ॥

इदमाभरण सर्व ममुद्गवन्यम्लमम्ति रत्नाङ्कम् ।
स्त्रीबालधन भवता प्राणसम मवथा रक्ष्यम् ॥ ८६ ॥

इत्युक्त्वा तत् सर्व मदर्श्य पुन सुमुद्रित कृत्वा ।
निक्षिप्य पुर प्रचुर सा समवादीत महेल्वे ॥ ८७ ॥

पाथेयमन पृष्ठाल् लाभन ममापयुज्यते लक्षम ।
त्व दातुमर्हमि मम देवाल्यधान्यभुक्तिमत्तोध्यम् ॥ ८८ ॥

इति लीलया भ्रुराणा ममुदगयुगम्य विनिमर कृत्वा ।
लक्ष क्षणाद गृहीत्वा जगाम निजवेश्म कङ्काली ॥ ८९ ॥

अथ निर्वर्तितकृत्या जाता नामागता वणिग्भवनात् ।
गन्धसुत हर्म्यगता प्रोवाच वल्लावली विजने ॥ ९० ॥

त्वयि मे हृदयमवम्मादन्त मक्त बलान् न निर्याति ।
त्व तु धनवान विवाह करिष्यमीत्येव मे शङ्का ॥ ९१ ॥

दिनरमणीय पुसा जन्मजघन्यस्तु गेहिनीसङ्ग ।
तदपि विवाहे मोहादयिनाग्तरादरा पशव ॥ ९२ ॥

नित्यप्रमूतिहतमुस्थिरयौवनपु
　　वेशोपचाररहितेषु मदोज्झितेषु ।
गोष्ठीविलासरसकेलिनिरादरेषु
　　दारेषु का स्मररति वल्हाङ्कुरेषु ॥ ९३ ॥

जात्यैव कामिजनरञ्जनजीवितामु
　　वेशोपचारनिरतासु ममीरभासु ।

कामप्रमोदममकासु (?) सविभ्रमासु
वेश्यासु कस्य न रतिः सततस्मितासु ॥ ९४ ॥

कुरु मे प्रत्ययहेतोर्धनधारणपत्रिकां विवाहे त्वम् ।
विहिता सैव तवास्ते मत्तगजस्याङ्कुशशिलेव ॥ ९५ ॥

इत्युक्तः स रमण्या स्थूलतरोज्ज्वलपत्रिकामलिखत् ।
नाम्ना विक्रमशक्तेर्नृपमहिषीभ्रातृपुत्रस्य ॥ ९६ ॥

अथ शय्याभवनगतं प्रातः स्वयमेत्य कङ्काली ।
जामातरमिदमवदन् मिथ्यैव सखेदवदनेव ॥ ९७ ॥

आसन्नयौवनस्त्वं दुहितुर्मे यौवनं त्वया प्रायः ।
क्षपितमलक्ष्यं स्त्रीणां गलति हि सहसैव तारुण्यम् ॥ ९८ ॥

स्थिरयौवना प्रवृत्त्या पुरुषा किल तालसालसकाशा ।
इह कन्यकाद्य तरुणी प्रातर्वृद्धा भवत्येव ॥ ९९ ॥

मासादधिकायातं दिनद्वयं पुष्पदर्शनस्नाने ।
अद्यैव कलावत्या गर्भाशङ्काकुलं चेतः ॥ १०० ॥

यौवनविभ्रमतापस्तनुनलिनीतुहिननिकरघनपातः ।
प्रसवदिनं नारीणां पातकमुग्रं स्तनयुगस्य ॥ १०१ ॥

प्रसवहृतयौवनानामधोमुखे लज्जयेव कुचयुगले ।
भवति न पण्यवधूनां विक्रयचर्चा तृणेनापि ॥ १०२ ॥

स्थविरत्वे पुरुषाणां भवन्ति गुणजीविकाः परिज्ञानं ।
यौवननाशे वेश्या यदि परमटति स्फुटं भिक्षाम् ॥ १०३ ॥

तस्मात् जनकाभावादविकलमापन्न्यमाननिजविभवम् ।
अखिलस्पर्शनगर्भितं प्रयच्छ सुमते कलावत्यै ॥ १०४ ॥

इत्युक्ते कुट्टन्या मोत्माह प्रीतये वणिक्तनय ।
आपत्स्यमानमचिरं प्रददौ हृष्ट कलावत्यै ॥ १०५ ॥

अथ शिथिलादरया म द्वित्रैर्दिवसै ममेत्य कङ्कालया ।
कृतसकेत कङ्क      श्रुत्यै कलावतीमूचे ॥ १०६ ॥

अयि रागदग्धहृदये कलावति व्रतवतीव कस्य त्वम् ।
एष त्वामर्थयते ठक्कुरपुत्रो रणविलास ॥ १०७ ॥

देवगृहगञ्जदिविरस्तव सततप्रार्थनानुबन्धेन ।
पदमुचितधन्यकाले गणयति चण्ड मकरगुप्त ॥ १०८ ॥

अद्यापि महामात्य सत्यरथस्त्वत्कृते समर्घदिने ।
प्रहिणोति वस्त्रयुगल न च प्रमादस्त्वयास्य कृत ॥ १०९ ॥

प्रेक्षणके त्वा दृष्टवा माहसराजेन राजपुत्रेण ।
त्वद्गत सरभसमनमा वामवमेनावरुद्धिवा त्यक्ता ॥ ११० ॥

विरजमि वयमि नवेऽस्मिन्नेकश्चेदीप्सितस्तव स्वामी ।
तत्किं यौवनभङ्गे ददाति कश्चिद धन मुग्ध ॥ १११ ॥

याभिर्यौवनसमये रागण धनार्जन परित्यक्तम् ।
ता एता पश्यन्ते भस्माङ्गयश्चीवरिण्यश्च ॥ ११२ ॥

कुचकाञ्चनकलशवती नितम्बसिंहासना स्मितच्छत्रा ।
एकपुरुषोपसेव्या नून त्व रतिरमणराज्यश्री ॥ ११३ ॥

भवत मयास्य वित्त दाक्षिण्यमिति प्रनष्टविभवेऽपि ।
मा त्व कृथा सुमध्ये ह्यो भुक्त नाद्य तृप्तिकरम् ॥ ११४ ॥

दासी दासी तावद यावत् पुरुषस्य किंचिदस्ति करे ।
क्षीणधनपुण्यराशेर्दुष्प्रापा स्वर्गनगरीव ॥ ११५ ॥

ह्यो दत्त्वार्थं कथमिव गच्छाम्यद्येति निवसते प्रायम् ।
क्व वृत्त वश्याना तत्क्षणधनदानभोग्यानाम ॥ ११६ ॥

इति कङ्कवदननिर्गतवचनशरैर्दारितो वणिक्तनय ।
निश्चेष्ट क्षणमभवद वैलक्ष्याद वीक्षमाण क्ष्माम् ॥ ११७ ॥

अथ मूलबन्धुनिधनव्यसनाद्यङ्गप्रसङ्गकथनाद्यैः ।
शय्याव्यवहारमकरोत कलावती गडवतनयस्य ॥ ११८ ॥

अद्य व्रतनियमो मे दु स्वप्ननिरीक्षणात पर मातु ।
षष्ठीप्रजागरेऽद्य च राजकुले तत्र मे शय्या ॥ ११९ ॥

अद्य वयस्यासूनोश्चूडाकरण मृगाङ्कदत्तस्य ।
इत्यादिभिरपदेशै सा प्रययौ कामिना भवनम ॥ १२० ॥

त्वरिता तत प्रभाते कदाचिदभ्येत्य कम्पविकलाङ्गी ।
कङ्काली शङ्खसुत जगाद भयसभ्रमार्तेव ॥ १२१ ॥

उत्तिष्ठ पुत्र तूर्ण व्रज दत्त्वा शिरसि किंचिदविभाव्यम ।
अस्मत्कृतेऽद्य यूनो सपत्नकलहे वधो वृत्त ॥ १२२ ॥

नगरपतिर्विषमतर कलावती मित्रमन्दिर याता ।
त्व तु वणिक्सुत साधर्वनगन्धे धावनि क्ष्माप ॥ १२३ ॥

तूलपटी त्यज पृष्ठाद् गृहाण तुस्ती (?) घरट्टमालात ।
को जानीते मर्मनि किं कुरुते क पर्जिशाग ॥ १२४ ॥

इत्युक्ते कङ्काल्या मिथ्यैव विमत्यवेश्मवरणाय ।
सृत्वा तद्वचनमसित पङ्क प्रययौ कुमार्गेण ॥ १२५ ॥

वश्याल्ता सराग पूर्व तदनु प्रक्षीनतनुरागम ।
पश्चादपगतराग पल्लवमिव दर्शयन्ति निजारितम् ॥ १२६ ॥

इति समयमातृकाया कङ्काल्या बुद्धिसविभागेन ।
भुक्त्वा वणिज सर्व कलावती पूर्णविभवाभूत् ॥ १२७ ॥

इति बहुभिरुपायै कुट्टनी कामुकाना
कृतसुकृतविहीना वञ्चना सा कृतघ्ना ।
वनभुवि मृगबन्ध हन्त पश्यन्ति नित्य
तदपि हरिणशावा कूटपाश विशन्ति ॥ १२८ ॥

समयस मातृका सा कृत्रिमरूपा कृता कलावत्या ।
तन्नाम्नैव निबन्ध क्षेमेन्द्रेण प्रबद्धोऽयम् ॥ १२९ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृतायां समयमातृकायां
कामुकप्राप्तिर्नामाष्टम समय ।

---

सालङ्कारतया विभक्तिरचिरच्छाया विशेषाश्रया
वशा सादरचर्वणा रसवती मुग्धार्थलब्धा परम् ।
आश्चर्योचितवर्णनानवनवास्वादप्रमोदाचिता
वेश्या सत्कविभारतीव हरति प्रौढा कलाशालिनी ॥ १ ॥

सवत्सरे पञ्चविशे पौषशुक्लादिवासरे ।
श्रीमता भूतिरक्षार्थं रचितोऽय स्मितोत्सव ॥ २ ॥

अद्रिच्छिद्रविनिद्ररौद्रफणिनामन्तास्ति काल कुल
मत्तास्तत्र वसन्ति दन्तिपतय सिहाश्रयेय गुहा
इत्याप्तिप्रतिबद्धवृद्धशबरीवर्गेण मार्गाग्रगा
यद्वैरिप्रमदा सदा वनमहीगाढग्रहे वारिता ॥ ३ ॥

वीरस्यार्तदयाविधेयमनस शीलव्रतालकृते–
निस्त्रिंश परदारकृज् जयविधौ यस्यैककार्य सुहृत् ।
तस्यानन्तमहीपतेर्विरजस प्राज्याधिराज्योदये
क्षेमेन्द्रेण सुभाषित कृतमिद सत्पक्षरक्षाक्षमम् ॥ ४ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृता समयमातृका समाप्ता ॥

---

# आत्मवृत्तम्

१

दशावतारचरितोपसंहारस्य अन्तिमाः श्लोकाः १-५

यो मत्स्यकूर्मादिविचित्ररूपैराश्चर्यकारी हृदयस्थरत्नः ।
श्रीमाननन्तः स्फुटशाङ्कचक्रः श्रियेऽस्तु विष्णुर्विभवोदधिर्वः ॥ १

कश्मीरेषु बभूव सिन्धुरधिकः सिन्धोश्च निम्नाशयः
प्राप्तस्तस्य गुणप्रकर्षयशसा पुत्रः प्रकाशेन्द्रताम् ।
विप्रेन्द्रप्रतिपादितान्नधनभूगोसंघकृष्णाजिनैः
प्रख्यातातिशयस्य तस्य तनयः क्षेमेन्द्रनामाभवत् ॥ २ ॥

तेन श्रीत्रिपुरेशशैलशिखरे विश्रान्तिसन्तोषिणा
विष्णोः स्वल्पविलोकिताकृतिसुधा संवर्धितोत्कण्ठया ।
वाक्पुष्पैरमलैर्गुणप्रणिहितैरम्लानशोभैः स्थिरैः
भक्तिव्यक्तदशावतारसरसः पूजाप्रबन्धः कृतः ॥ ३ ॥

स्तुतिसङ्कीर्तनाद् विष्णोर्विपुलं यन् मयार्जितम् ।
तेनास्तु सर्वलोकानां कल्याणकुशलोदयः ॥ ४ ॥

एकाधिकेऽब्दे विहितश्चत्वारिंशे सकार्तिके ।
राज्ये कलशभूभर्तुः कश्मीरेष्वच्युतस्तवः ॥ ५ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितदशावतार-
चरितोपसंहारभूतात्मचरितम् ।

----

## २

### बृहत्कथामञ्जर्या उपसहारश्लोकसग्रहश्लोका २१-४१

काश्मीरका गुणाधारप्रकाण्डश्चाभिधोऽभवत ।
नानार्थिजनसकल्पपूरणे कल्पपादप ॥ १ ॥

यस्य मेरोरिवोदारकल्याणापूर्णसपद ।
अगणेयमभूद गेहे यस्य भोज्य द्विजन्मनाम् ॥ २ ॥

सूर्यग्रहे त्रिभिर्लक्षैर्दत्त्वा कृष्णाजिनत्रयम ।
अल्पप्रदोऽस्मीत्यभवत स लज्जानतकन्धर ॥ ३ ॥

स्वयम्भूनिलये श्रीमान य प्रतिष्ठाप्य देवता ।
दत्त्वा कोटिचतुर्भाग देवद्विजमठादिषु ॥ ४ ॥

पूजयित्वा स्वय शम्भु प्रसरद्बाष्पनिर्भर ।
गाढ दोर्भ्या समालिङ्ग्य यस्तत्रैव व्यपद्यत ॥ ५ ॥

क्षेमेन्द्रनामा तनयस्तस्य विद्वत्सु विश्रुत ।
प्रयात कविगोष्ठीषु नामग्रहणयोग्यताम् ॥ ६ ॥

श्रुत्वाभिनवगुप्ताख्यात साहित्य बोधवारिधे ।
आचार्यशेखरमणेर्विद्याविवृतिकारिण ॥ ७ ॥

श्रीमद्भागवताचार्यसोमपादाब्जरेणुभि ।
धन्यता य पर यात नारायणपरायण ॥ ८ ॥

कदाचिदथ मित्रेण स द्वादश्यामुपोषित ।
प्रार्थितो रामयशसा सम्म स्वच्छचेतसा ॥ ९ ॥

कथामेतामनुध्यायन् दिनेषु विपुलेक्षण ।
विदधे विबुधानन्दसुधास्यन्दतरङ्गिणीम् ॥ १० ॥

स श्रीदेवधराग्यस्य द्विजराज्यपदस्थिते ।
सर्वज्ञस्याज्ञया चक्रे कथामेतां विनोदिनीम् ॥ ११ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृताया
बृहत्कथामञ्जर्या स्वचरितम् ।

— —

३

भारतमञ्जर्युपसंहारस्य १५ श्लोकाः

काश्मीरको गुणाधार प्रकाशेन्द्राभिधोऽभवत् ।
नानार्थिसार्थसंकल्पपूरणे कल्पपादप ॥ १ ॥

सम्पूर्णदानसन्तुष्टा प्राहुस्त ब्राह्मणा सदा ।
इन्द्र एवासि किं त्वेव प्रकाशस्ते गुणोऽधिक ॥ २ ॥

कदाचिद् ब्राह्मणेनैत्य स रामयशसार्थित ।
संक्षिप्ता भारतकथा कुरुष्वेत्यार्यचेतसा ॥ ३ ॥

स तमूचे करोम्येव प्रागेतच् चरितं मम ।
दृष्ट स्वयवनीसूनु स्वप्ने ज्ञाननिधिर्ददौ ॥ ४ ॥

स नमस्कृत्य वरद सज्जोऽहं त्वत्स्मृतीरिति ,
इत्युक्त्वा स्वप्नदृष्टस्य मुनेरस्तुष्टाव तद्वपु ॥ ५ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितभारतमञ्जरी-
समुद्धृत स्वकीयचरितम् ।

——

—८—

रामायणमञ्जर्युपसंहारस्य १-७ श्लोकाः

कश्मीरेष्वभवत् सिन्धुजन्मा चन्द्र इवापरः ।
प्रकाशेन्द्रः स्थिरा यस्य पृथिव्यां कीर्तिकौमुदी ॥ १ ॥

सदा दयार्द्रहृत्तेन महता भद्रमूर्तिना ।
साधु कुञ्जरिता येन प्राप्ता नीतिपताकिना ॥ २ ॥

विद्वज्जनसपर्याप्तिपर्याप्तिस्वजनोत्सवः ।
कथासारसुधासारं क्षेमेन्द्रस्तत्सुतो व्यधात् ॥ ३ ॥

मुक्तात्मना रणत्तारहारनूपुरमेखला ।
विलासलासिका यस्य वदने भाति भारती ॥ ४ ॥

लोभाभिमानमलिनानि धनानि नित्यं
कान्ताकटाक्षचटुलानि च जीवितानि ।
ज्ञात्वेति चन्द्रधवलानि यशांसि येन
काव्ये स्थिराणि भुवनेषु निवेशितानि ॥ ५ ॥

आमोदयन्ति सम्मान्यतिकोमलानि
चित्रेण रामयशसा प्रणयार्थितानि ।
येनानिशं प्रणयभूषणतां जनस्य
नीतानि काव्यकुसुमान्यमितानि तानि ॥ ६ ॥

गुणा गुणितया भान्ति येषु वस्तेषु विस्मयः ।
निर्गुणेषु गुणानेव ये वदन्ति जयन्ति ते ॥ ७ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितरामायण-
मञ्जरीसमुद्रस्य स्वकीयोदन्तम् ।

# श्लोकानामनुक्रमसूची

### क्ष

ख



ग

घ

## द

प

## य

र

## व

श

## ह





# परिशिष्टम् (२)

## क्षेमन्द्रोदोहृताः ग्रन्था ग्रन्थकाराश्च

(महाभाष्ये (१ ३.४८) उदाहृत किन्तु जानकीहरणे न दृश्यते)

गन्दिनक

करतरलितवन्धम् १०० । ४९

गौडकुम्भकार

लाङ्गूलेन गभस्तिमान् ३६ । ५८

चक्र

नेतु नीमिरिभा ११४ । ९०

सत्यं पातालकुक्षि १०८ । ७४

चन्द्रक

कुश काश खञ्ज २८ । ४०

कृष्णोनाम्ब गतेन २० । २१७

(लीलाशुकस्य कृष्णकर्णामृते (२ ६३) दृश्यते)

खगोत्क्षिप्तं २० । १९

यत्रानेके क्वचिदपि ८० । ५३

युद्धेषु भाग्य १९ । १६

स्तनौ सुपीतौ १७६ । ३१

तुञ्जीर

त्वन्मुखचन्द्रनिरीक्षण ३५ । ३१

दामोदरगुप्त

कुट्टनीमतम्

(४०२) अधरे बिन्दु कण्ठे २८ । ३

दीपक –

अयि विरह विचिते ५३ । ५१

तनुधनहर १०३ । ५८

पुण्ये ग्रामे वने ५० । ८५

श्येनाङ्घ्रिग्रह ५३ । ९०

धर्मकीर्ति

लावण्यद्रविणमद १४ । ३

# परिशिष्टम् (३)

## क्षेमेन्द्रस्य उदाहृताः स्वकीयाः श्लोकाः

अमृततरङ्ग· –

आवर्तशोभी ८० । १००

अवसरसारः –

भग्नाहितदवसित ३६ । ५७

कनकजानकी: –

अत्रार्यः खरदूषण २३ । २३

आर्यस्यास्त्रघन ३० । ४८

कर्णाभ्यर्णविकीर्ण ८० । ४९

जम्बूबिम्ब ८२ । ५७

वामस्कन्दनिषण्ण. ८२ । ५८

चतुर्वर्गसंग्रहः –

(४.२३) चित्तं वातविकासि ८३ । ६३

(४.७) भोगे रोगभयं २९ । ४३

(१.२६) मान्यः कुलीनः ८२ । ५९

चित्रभारतनाटकम्: –

दृतदचञ्चत् २२ । १९

नदीवृन्दोद्दाम ५२ । ८८

पयूनाहतकया ७९ । ४३

देशोपदेशः –

(४.५) भगदत्तप्रभावाढ्या ७८ । ४०

# परिशिष्टम् (४)

## क्षेमेन्द्रस्य अनिर्दिष्टग्रन्थाः स्वकीया श्लोकाः

# परिशिष्टम् (५)

## शब्दसंग्रह

अकालपुष्ट-, a — precocious ४०३ । ३
अकृतश्रम, a — one who has never studied ३२९ । ८३
अक्षरमक्षकमेलालिप्तमुख, m — whose mouth is besmeared with the black soot while licking off letters from writing, ३०५ । ४५
अक्षरशिक्षक, m — a tutor teaching the alphabets ४१५ । ३७
अक्षिकोप m — irritation of the eyes ३४१ । ६०
अक्षिराग m — eye love love as expressed by an exchange of glances (cf नम ग) ३८६ । ८
अक्षिजन्मन्, a — born of eyes ३८८ । ३१
अक्षिजीवाञ्जन, n — collirium making the eyes lively ३६८ । ५९
अक्षोट n — a walnut fruit ३१६ । १६
अङ्कशताङ्का-, a — marked out with hundred figures ४०७ । ४५
अङ्कसहस्राङ्क, a — marked with thousands of curves (hooks) ३७१ । ४
अङ्कुशशिखा, f — the tip of the goad (अङ्कुश) ४१२ । १५
अगारदाहिन्, a — (cf आगलाव्या in marathi) a legal term (?) ३२४ । २८
अङ्गमर्मन् n — vitals of the body ३९० । ५४
अङ्गरक्षक, m — cloth soft to touch ३११ । ४८
outer covering of the body (आंगरखा) ३१४ । ७२
अङ्गविद्धविषा, a f. — whose body is pervaded by poison (cf विषकन्या) ३६५ । १०१
अङ्गविभाविन्-, a — apparent on the body ३८६ । १४
अङ्गहारयुक्ति, f — a plan for gesticulation ४०७ । ४४

अङ्गाररराग-,m love representing charcoal or fire ३८६ । ७
अञ्चलाकर्ष ,a pulling at the end of the garment ३६१ । ५७
अचिकित्सक-,m one who does not diagnose ३१९ । १२८
अचुल्लीपाक-,m without anything ever being cooked in the fireplace २७७ । २८
अचोर ,m. not a thief, i e honest ३४१ । ५८
अज्वर ,a having no fever ३०० । ५८
अज्ञातचित्त ,a of an unknown mind ३८९ । ४७
अञ्जलिसृष्टहस्ता ,a f with hands closed (embraced) ३९६ । २९
अतिचौर ,a expert in theft, surpassing thieves, better than ordinary thief ३०२ । २७
अतिपूर्ण a excessively full (of wealth or pus) २७५ । ५
अतिरात्र ,m a proper name ३९६ । ४२
अतिसन्तापनष्टच्छाय ,a losing lustre through great heat or pain ३९० । ५६
अत्यन्तनिकटस्थिति- a staying very close ३८८ । ८
अत्यन्तनिश्चल-,a extremely steady ३९० । ५६
अदृष्टलवणा ,a f who had never seen salt (on account of stingyness) २७७ । १५
अधनापवाद ,m scandals concerning poverty ३९३ । ८१
अधमगा ,a f going to the wicked or the lowest persons, acting wickedly ३०१।५
(the three musical notes धमगा) ३०१ । ५
अधिकरणद्विज ,m the birds of the court, judicial officers ३३५ । १४४
cf. अधिकरणभट्ट ३३४ । १३३
अधिकरणपत्रलिखित-,n, writing on a stamp, a letter of authority ४१२ । १०४
अधिकरणभट्ट-,m an officer in the court (नाजर in marathi) ३३४।१३३
अधिकारपरिभ्रंश ,m loss of authority ३४४ । ९७
अधिकारमद ,m vanity of authority ३४४ । ९८
अधिकारिसूनु ,m the son of an officer ३९९ । ३०

अनङ्गलेखा,f	a proper name ३९५।१४
अनङ्गसार,- m.	the essence of love ३९४।१०
अनन्त-,a	having no end. N of a king in kashmir ३०७।३
अनन्यचित्तनियत-,a solely bent upon other's mind ३८०।९०
अनशनव्रतिन्-,a	having a vow of not eating; abstaining from food ३०१।२४

अनुपमा-,f	a proper name ३६०।५२
अनुवर्तनजीविन्-,a. living on compliance ३१०।३३
अनुवृत्तिपूर्वम्,ad. preceded by obedience ३९२।७०
अनेकजिह्व-,a	speaking in different languages; double tongued i.e.a deceiver २८७।२

अन्त सक्त-,a.	firmly attached ४११।८१
अन्त सानुशय-,a	internally repenting ३७५।६०
अन्तक्षण-,m.	last moment at the time of death ३९३।३१
अन्तरस्थ-,a	lying inside ३८९।४३
अन्तर्गलीन-,a	abiding within himself २८७।५
अन्तर्नि स्नेह-,a.	having no love in the heart ३८८।३१
अन्तर्मुख-,a	turned towards, self centred, introward २८७।५

अन्त्याङ्गुलि-,m	the small finger ३२०।१३२
अन्धकद्विष्-,m.	enemy of the demon अन्धक i.e. god siva ३९८।४
अन्यप्रकारता-,f.	assuming different form २८४।८
अन्यराशिप्रवण-,a. inclined to acquire other's wealth ३१६।९७
अन्यवक्त्र,a f.	with her face turned aside ३९३।८३
अन्याश्रय-,a	depending on others ३८५।९०
अन्नपाकिन् (स्वयंपाकिन्)-,a. one who cooks his own food himself २९०।३३

अन्यपुत्र-,m.	another's son or another son ३५८।२४
अपस्माररागः-,m	love resembling epilepsy ३८६।१४
अन्नव्यञ्जन-,n.	food and condiments ३८२।१०५
अन्नसंकाङ्क्षिन्- m. desirous of food

अपुनर्दर्शनचेतसा-,ad. not with a view of returning ३१८।११३
अर्थोल्पपरिपूरक-,a filling the wealth of the poor ३१२।५४
अप्रस्तावकटूत्कटा-,a f. bitter and impleasant on ccount of being inopportune ४००।२४
अभिचारहुत-,a. offered to for exorcising purpose, ३७२।१ fire to whom an oblation is offered of अभिचारहोम ३८५।१
अभ्यङ्गपट्टिका-,f. ointment bandage ३२८।६०
अमङ्गलाकृति-,a. having an inauspicious face २७७।६
अमृतस्पर्श-,m. nectarlike touch ३७७।५
अम्भोभर-,m volume of water २९९।१२
अभ्युत्थितस्तब्ध-,a. risen and stiff (prosperous and haughty) ३४४।७७
अयत्नसाध्य-,a available without effort, loose ३२२।५
अधर्मपथ-,m a path of sin ३०२।२७
अर्थप्राण-,a who regard wealth as his life i e richman ३२८।७१
अर्थलुब्ध-,a. greedy of wealth, desirous of good meaning २७१।१
अर्थस्तुति-,f. praise of money or wealth ३८३।११५
अर्थक्षीराभिधा-,f named अर्थक्षीरा ३६२।६८
अर्धघंटिका-,f a proper name ३५५।४
अर्धनिबोधभाज्-,a. half awakened ३९२।८२
अर्थोद्यम-,m. efforts for acquiring or earning ३८५।३५
अर्धवेलाम-,ad for half a time i e. for a short time ३११।७२
अवान्नतिलक ,a marked with a तिलक at the time of feeding २७०।५
अलिपिज्ञ-,a. not conversant with writing; ignorant; illiterate २१०।८
अर्थशास्त्र-,n. (should be as अर्थशातम्) plenty of wealth ३५२।२२

अलौकिकस्पृह-,a　pretending to be desireless ३१० । ३१
अल्पकौशला-,a f.　having little skill　३७९ । ३३
अल्पलीन-,a　sticking for a short time; disappearing in a short time　३८७ । २०
अवद्यकारिन्-,a　doing blameable actions; doing base actions　३२७ । ६६
अवद्यविद्याविद्-,a　knowing the censurable lore ३१३ । २८
अवनिसक्त-,a　rooted to the ground　२७६ । ११
अवरुद्धिका-,f　a woman secluded in the inner apartment; a kept woman or a keep ३५७ । २१
अवस्करक्षेत्र-,n　a place for a closet　तडाग, शौचकूप)　३४२ । ७१
अवसादपदवी-,f　state of distress　३५२ । २३
अवहारोपयोग्याय-,a　for use in breaking an appointment ३११।६९
अवारितम्-,ad　unrestricted　३८१ । १४
अविकार-,m　no change　३५२ । २३
अविचिन्तित-,a.　unexpected　३२९ । ८४
अविदितसकलसमास-,a. who did not understand the whole compound　३०४ । ४१
अशुचिरत-,a　attached to unclean things　११० । ५०
अशेष-,a　without a remainder i e a popper (M. W.)　२८४ । ४
अशेषायुस्-,a　about to die　३०१ । २०
अशौचनिधि-,m.　store of impurities　३३२ । २१३
अश्रुतपण्डित-,m.　conversant with ignorance, ignorant २९४ । ९
अविचलेक्षण-,a.　steady eyed　३४२ । ८३
अश्रुवर्षिन्-,a.　shedding tears; weeping　२९५ । ५
अश्वराग-,m.　horse-like love　३८६ । १०
अश्वशालादिविर-,m. a stable man; a groom or warder ३५१ । ३७
अष्टावतारस्तोत्र-,n　a stotra referring to the अष्टावतार or कृष्णस्तोत्र　३२५ । ४०
असाधुशब्द-,a.　using bad words　३०४ । ४१

असूचिभेद्य-a not to be pierced even by a needle, too young for the amorous sport २८०।१६

असत्याधारा-,a f, based on falsehood having a false principle ३७८।६१

अस्थाननखक्षत-a nail wounds given at an improper place (pudenda) ४०४।११

अस्थियन्त्रीतन्त्री f the frame of bones and a lute with strings ३७१।२

अस्थिरता-f unsteadiness, attached to or fond of bones (Sch) ३७१।६

अस्थिराग-,m bone like love २८६।१३

अस्थिशेष-a one whose bones have only remained २३४।१३५

अस्थिशेषता-,f reduction to a skeleton ३४६।२११

अस्थिसंस्थ-a lying in bones ३८९।४३

अहंकारस्तब्ध-a stiff or weak with vanity २९०।८

अहंकाराभिधान a having the name of ego ३८६।९

## आ

आकारशीर्षहारिन्-a omitting sign of the long आ and the head destroying body and headlines of letters, २०५।४५

आक्रन्दवर्जित-a devoid of crying ३६०।५१

आखुविखण्डित-,a damaged or bored by rats ३१७।१०१

आचारनिधि-m store of good conduct ३८१।९८

आतरदर्शनमात्रम ad enough for the sight of freit for crossing the river ४११।८५

आतुरवित्त-n money received from a diseased person (by a physician) ३५२।२८

आन्त्रोदरत्वक्त्रिता-f having skin over bowels and stomach sunk deep inside ३७१।३

आत्मारामता–,f condition or state of rejoicing in one's self (M. W.) ३३६। २१

आत्मारामस्थिति–a staying in his own garden; rejoicing in self position २८७। ५

आपत्प्रशमन -,n. pacification of the distress; removing distress ३१६। ९७

आपत्स्यमान–,a what was going to be obtained ४१३। १०५

आपाण्डुरमखी–a,f. (पाण्डुमुखी) pale faced (M. W.) ३३०। ९०

आप्तवित्त–,a. with wealth obtained or acquired ३९३। ८८

आमावोट–,m a kind of dress; a piece of cloth (of sch) (कुड़ते in marathi) ३०४। ३८

आयव्ययकार्य-,n transaction concerning income and expenditure ३५८। ३१

आयातकार्य-,a. with whom people have some business ३१७। १०७

आयु:क्षयङ्कर-,a causing destruction of life ३२८। ७३

आरामिक-,m a gardener ४०१। ११

आरूढरतिपन्न -,a (रतिबन्ध –मयोग) being in the posture of cohabitation ३७७। ५६

आर्याङ्गना ,f a noble lady ३५८। ३३

आमपक्वसंहारकारिन्-,a. consuming or devouring raw as well as cooked food ३३७। १९

आसन्नयौवन-,a. approaching youth, adolescent ४१२। ९८

आसन्नरोग-,a. who is almost to fall ill ३२७। ५८

आसन्नलाभाभिमुख-,a with face turned towards eminent profit ३९७। १२

आश्लिष्टकूट-,a, deceitful without efforts ३७०। ३५

आस्थानदिबिर-,m the assembly clerk ३३२। ११७; ३३३। १२०

आस्थानभट्ट-,m a clerk of the assembly ३६६। २६

आस्थानभट्ट-,m. court officer, medical officer ३३४। २३७

## इ

इन्द्रियसंज्ञक-,a. named after इंद्रियः ३८६ । ९
इन्द्रायुधराग-,m. rainbow like love ३८६ । ७
इन्द्रियेच्छा-,f. desire of the senses २८९ । ३६

## ई

ईर्ष्यारिषु-,f. anger due to envy; wounded or scared with spite (vedic) २८१ । २७, ३७५ । ३
अरुष्-,f. scar or wounds (M. W.) ३७५ । ३४

## उ

उच्छिष्टफालक-,n. a wooden tray for throwing the उच्छिष्ट फालकम्-,n. a showel ३२८ । ११२
उज्जामतण्डुल-,m. a kind of rice (?) ३५३ । ७८
उच्छृंखलायास-a, tormenting of perversed men १२३ । २२
उज्जास-,m. liberation कदजेपत्र; सावा in marathi) ४१२ । ९६
उत्कोचभक्षण-,n. swallowing bribes; corruption ३३५ । १४१
उत्क्षिप्तभुजा-,a f. with hands raised ३९३ । ८३
उत्क्षिप्तशृंखला-,a. one who has thrown off the chains ३६० । ५१
उत्तमस्त्रीसमागम-,m. intercourse with high class women ३८९।४६
उत्पथविवर-,m. hole made through wrong road or a byelane ४०६ । ४०
उत्पुंसिताक्षर-,a. who had rubbed off the letter ३२० । १३२
उत्सरत्पटलीमिश्रकंकावलयमालित-,a. having a large number of sandal bracelets interwoven with a moving golden ring (पटली) ३२० । १३६
उत्स्फोटितमुख-,a. (cf उल्लुञ्चितमुख) whose beard has been plucked ३४४ । ९०

उदञ्चितकच-a　with the hair raised up or combed backward २८८ । १६

उद्देशनिदर्शन-,n　illustration by the object of description ३०६ । ५२

उद्देशलेशेन-ad　in the form of statement, by way of sample ३९४ । ९०

उन्मार्जितानना-,a　having a clean face २८२ । ३३

उद्बाष्पदृश्-,a　having tearful eyes ३५३ । ३५

उद्वेष्टविवेष्टन ,n　writing and squirming १९६ । २८

उत्ताप m　pain, troubles, N of a demon ३१० । ३९

उपबिन्दु-m　smaller dot ३३१ । १०४

उपलखण्डिका ,f　pieces of stones, rubbles ४१० । ५३, ३३५ । २

उपस्करण n　utensils or house hold articles ३१७ । १०४

उपानत्कुत्सितारावगर्वित-,a　haughty on account of the despised noise of a shoe २९१ । १२

उपायशून्य ,a　devoid of expedient ३८४ । १३१

उपासकदास ,m　a buddhist servant ३६१ । ६५

उलूकवदन a　having owl like face, owl faced ३७१ । ७

उष्ट्रगल ,m　the neck of a camel २८५ । १३

## ऊ

ऊरुस्वस्तिक-,n　a स्वस्तिक formed by crossing the thighs ३२८ । ६५

ऊर्णायु-,m.　a ram (मेष), a blockhead (vedic) ३७३ । २०

ऊर्ध्वनयन ,a　with his eyes upwards, looking up २९३ । ४०

ऊष्मन्- m　fire ३६३ । ७७

## ऋ

ऋणराशि-,a　having a burden of debts, greatly in debts ३०४ । ३८

ऋद्धिवर्धन-,n. increase in prosperity, growth of wealth ३६१ । ६४

## ए

एकदृष्टि-,a one eyed, concentrating solely upon one thing २७६ । १०

एकपुरुषसेव्य-,a fit to be enjoyed by one man only ४१३ । ११३

एकाङ्गनाशन-,a destroying one side of the body ३२३ । २३

## क

कक्षाकुट्टन-,n pounding the sides ३२० । १४०

कक्षालनामन्-,m named कक्षाल ३९५ । १९

कङ्क-,m a proper name ४०१ । ३१

कङ्कमुख-,a a pincer, a sharp instrument, a sort of forceps (M W) २७४ । ११

कङ्काली ,f (पिशाचिनी) devouring human flesh, a female demon, a proper name २७२ । १४

कङ्क + आली ,(?) a row of birds २८४ । ९

कङ्कावलय- n a sandal bracelet ३२० । १३६

कञ्चुकाभ ,a like to a कञ्चुक ३९३ । ८९

कटि ,f a proper name ४०० । २२

कटक-,n (?) ३६९ । २२

कटीघण्टाभिधान ,a कटीघण्ट by name ३६४ । ८९

कण्टकतीक्ष्ण a as sharp as a thorn ४०४ । १४

कटीशूल ,m sciatic pain, plurisy २९१ । १८

कटुकाधिवास, m bitter smelling cosmetics ३९३ । ८२

कण्टकजालायते a behaving like thorns ४०५ । २४

कण्ठप्रणाल ,m throat passage ३३१ । १०७

कण्डूविखण्डन, a appeasement of itch (sexual desire of women) ३३९ । ४४

कथितावसाद-,m (?) expressed indifference ३९३ । ८१
कदन्न ,n bad food or little food २८१ । २६
कन्यामञ्जरी f a blossom like girl i e a beautiful young girl २९५ । ७
कपटकाममयी a f full of false love ३७३ । २४
कपटतुला f a balance of deceit ४०७ । ४५
कपटनाटक ,n a drama of deceit २८८ । ७
कपटाश्रय a based on tricks , full of tricks ३५५ । १
कपटाक्षशलाका f a false dice ३६३ ।८०
कपटाक्षशाला f. a gambling house for deceiving cf द्यूतशाला ३६१ ।८०
कपालपाणि a with a skull in hand ३०२ । २५
कपिमुख a having a monkey like face, N of a demon ३१० । ३६
कमल m a proper name ४०१ । ३२
करङ्क ,m (?) skeleton २९० । २
करणी f a mason s instrument ( थापी in marathi)
करण्ड- m a bamboo basket २९१ । १४
करभग्रीवा- f long necked as a camel ३५२ । २७
करिका-,f water vessel ३१७ । १०९
कर्णपूरराग- m love resembling ear ornaments २८६ । १४
कर्णलग्न, a attached to the ear, constantly lacking ३८९ । ४६
कर्तरीहस्त a with a scissor in hand ४०९ । २५
कर्णसुखाभ्यास ,m practice of giving pleasure to the ear २८८।३१
कर्पर ,m a proper name ४०१ । ३८
कर्पटी ,f a torn cloth, a ragged cloth ३२० । १३७
कलमकर्तरी f a penknife or scissor to cut the ends of a pen ३१८ । ११२
कलमच्युत- a fallen or dropped down from the pen ३३४।१३०
कलमरेखा ,f the pen point ३२० । १३२

कलमशिखाहत-,a. beaten with a stroke of a pen i e destroyed through writing २९८ । ६
कलमाकर-,m. a mine of pens; working with a pen ३१० । ३४
कलमास्त्र-,n a weapon in the form of a pen ३०८ । १२
कलश-,m. a proper name ४०१ । ३४
कलशप्रद-,a (?) giver of a pot (pitcher) ३४३ । ८५
कलह ,m a proper name ४०१ । ३५
कलहाङ्कुर-,m. sprouts producing quarrels ४११ । ९३
कलहोत्कट-,a. furious in quarrel; quarrelsome २७४ । ७
कलहोपवास-,a. fast due as a result of quarrels ३९३ । ८२
कलङ्ककण-,m slighest blame ३८२ । ११४
कला-,f a proper name ३६४ । ८८
कलाकोश-,m. wealth of arts ३८२ । १८
कलाभृत्-,m. one holding some art, an artisan, the digit bearer, i. e the moon २८७ । १
god siva (M. W.) ३०७ । ८
कलावत्-,a possessing arts, skilled in fine arts, the moon २८४ । ६
कलिपन्नग-,m a serpent during the कलि age ३४२ । ७२
कल्मषमानस-,a. desirous of moral stain ३०९ । १८
कल्पदोष-,d. having the defects of a kalpa ३८८ । २७
३२४ । २४, ३३६ । १२
कल्यपाल-,m. a distiller or seller of spirituous liquors f. कल्यपाली ३६४ । ८८
कवलिताखिल-,a. swallowing every thing ३०८ । १६
कष्टं मयैव कृष्टः ज्वलितागारः स्वहस्तेन, alas, I have myself pulled out chestnuts out of fire ४०४ । ८
कस्तूरिकामधु-,n. liquor or honey scented with musk ३२१ । १४७
काकग्रीवा-,a (f) with neck just like a crow; crow-necked ३०१ । १

काचकाचरलोचन-,a. with glassy eyes; having eyes shining like glass ३५० । १

काचर-,a. (कपिल) tawny, brown ३१३ । ६७

काचराक्ष-,a. having glassy eyes. ३३१ । १०५

काचराग- m. glass like love ३८६ । ६

काञ्चनी-,a.f a poisonous medicine producing jaundice and ultimately death ३५३ । ३०

काञ्जिका- f sour gruel of rice (पेज in marathi) ३४५ । १०७

कान्ताकृति-,f the appearance or form of a lovely woman ३७३ । २४

कान्तावलेशलेशविभागवत्-,a. sharing in the least the pain of the female companion ३८९ । ४२

कापालिकव्रत-,n a vow observed by a कापालिक ३२४ । २४

कामतत्त्व-,n. principles of love ३६५ । १०३

कामतात्त्विक-,a ekpert in the science of sextual love ३३७ । १७

कामप्रमोदममका-,f. (? owned by (or subservient) or completely under the control of sexual enjoyment ४१२ । ६४

कामप्रमोद-,f sexual enjoyments ४१२ । ६४

कामभोगसामग्री-,f materials of enjoyment ४०७ । ५०

कामला ,f jaundice ३१३ । ६२

कामलाहरितच्छायशिर शाटककञ्चुक-,a. whose shirt and head-dress had a green lusture like that of jaundice ३१३ । ६२

कामसत्त्वम्-,n amorous sport, free enjoyment ३३६ । ४३

कामिगण-,m a friend of the lustful २८३ । १२०

कामिनीदीप्तिरसिक ,a. taking delight in the lustre of women ३६० । ५५

कामिस्पर्धिन् a vying with lovers ३९१ । ६३

कामुकछद्मचारिन्-,a (णी f)—(prostitute) practising deceit towards lovers ३४१ । ५६

कामुकलोक-,m. a group of lovers ३८४ । १२७

कामुकलोकयात्रा-,f. condut of lovers ३९३ । ८४

काम्ब-,m a proper name ४०१ । ३७
कायपण ,m. wealth in the form of body ४०९ । ६४
कायविक्रय-,m sale of body (prostitution) ३८३ । ११६
कायस्थनाथ-,m chief of writers ३००।२८
कायदर्पश्लोद्भुत-,a born of pride in one's own physique ३८८।३५
कायस्थसुन्दरी-,f the beautiful lady of the writer ३२१ । १४८
कायदूत-,m a messenger ३११ । ४६
कालकङ्काल-,a reduced to death-like skeleton २९० ।२
कालखण्ड ,m a part of time ३९५ । १७
कालदौरात्म्य ,n wickedness of time (age) ३४४ । ९३
कालाहार ,m. (कालापहार) whiling away the time, waste of time ३६१ । २५
काव्यहेवाकिन्-,a devoted to composing poetry ३०० । १८
कापायराग-,m. love resembling brown colour २८६ । ४
काष्ठभूतता-,m the state of being reduced to a piece of wood i e as if completely unconscious ३५७ । २०
किशारुवर्ति, f (?) ointment prepared from the beard of corn ३४१ । ५९
कितवचक्र ,n a group of gamblers ३०१ । २३
किलाट ,m inspissated milk ३२७ । ५९
कीलवर्त-,m a proper name, a helmsman (सुकाणूवाला) ४०१।३९
कुकुटीकोटरोदर ,n the inside of which is like the nest of a hen २१६ । ९९
कुक्षिभेद ,m splitting the sides, N of a demon ३१० । ३६
कुक्षिभेदिन ,a loosening the bowels, splitting the bowels २९३ । ३१
कुङकुमराग ,m love resembling कुङ्कुम ३८६ । ४
कुम्भादेवी-,f a proper name ३६४ । ८६
कुटुम्बिभट-,m hosts of family relatives ३०४ । २८

